रूप ४ ज्ञान वज्रधर ५ महा दानी शिवरूप ६ विद्या वज्रधर ७ ब्रह्मारूप परमेश्वर तुम ८ ही ९ सभीष्ट दान में समर्थ हो १० योगधन के लिये ११ हमसे सा धन किये जाते हो १२ विराट् रूप अन्न के लिये १३ सिद्ध किये जाते हो १४ प्रकट हूजिये १५ आत्म प्रतिबिंब को पान करो १६ हृष्ट हूजिये -॥ ३॥

प्रजापति ऋषि राज्ञी त्रिष्टुप् छन्द इन्द्रो देवता-

विदोरायेसुवीर्यम्भुवोवाजानाम्पतिर्वशाँ२॥ अनु। मंध्ँहिष्ठवज्रिन्नृञ्जसेयःशविष्ठःशूराणाम्॥ ४॥

हे (मंहिष्ठ) अतिशयेन दान शील (वज्रिन्) ज्ञान वज्र धर परमेश्वर (यः) (शूराणाम्) (शविष्ठः) बलवत्तरः स (वाजानाम्) विराड् रूपान्नानां (पतिः) त्वं (राये) योग धनाय (ऋञ्जसे) अस्माभिः साध्यसे (सुवीर्यम्) योग बलं (विदः) लम्भय प्रापय (वशान्) वश वर्त्तिनो भक्तान् (अनुभुवः) अनुभव गतो भव॥ ४॥

**भावार्थः** - १ हे बड़े दान शील २ ज्ञान वज्रधर परमेश्वर ३ जो ४ शूरों में ५ महाबली है वह ६ विराट् रूप अन्नों के ७ स्वामी तुम ८ योगधन के लिये ९ हमसे सिद्ध किये जाते हो १० योगबल को ११ प्राप्त कराओ १२ वश वर्त्ती भक्तों को १३ अनुभव में प्राप्त हो॥ ४॥

प्रजापति ऋषि राज्ञी बृहती छन्द इन्द्रो देवता-

योमंध्ँहिष्ठोमघोनामंध्ँशुर्नशोचिः। चिकित्वोअभिनोनयेन्द्रोविदेतमुस्तुहि॥ ५॥

(यः) (मघोनाम्) धनवतां मध्ये (मंहिष्ठः) अति शयेन दा

ता (अंशुः) सूर्यः (न) इव (शोचिः) दीप्तः (इन्द्रः) परमेश्वरः (विदे) विद्यते सर्वैर्ज्ञायते (तम्) (उ) एव (स्तुहि) स्तुतिं कुरु हे (चिकित्वः) ज्ञान स्वरूप (नः) अस्मान् (अभि) अभिलक्ष्य (नय) स्वात्मानं प्रापय ॥ ५ ॥

**भावार्थः** –१ जो २ धनवानों के मध्य ३ महादानी ४,५ सूर्य की समान ६ दीप्त ७ परमेश्वर ८ विद्यमान है सब से जाना जाता है ९,१० उसी की ११ स्तुति करो १२ हे ज्ञान स्वरूप १३ हमको १४ देखकर १५ अपने आत्मा को प्राप्त कराओ ॥ ५ ॥

प्रजापतिर्ऋषिः भुरिगार्षी बृहती छन्दः इन्द्रो देवता-

ईशे हि शक्रस्तमूतये हवामहे जेतारमपराजितम्। स नः स्वर्षदति द्विषः क्रतुश्छन्द ऋतं बृहत् ॥ ६ ॥ २

(हि) यस्मात् (शक्रः) सर्व शक्तिमान परमेश्वरः (ईशे) ईश्वरोऽस्ति तस्मात् (तम्) (जेतारम्) असुराणां जेतारं (अपराजितम्) (हवामहे) आह्वयामहे (सः) (क्रतुः) यज्ञ पुरुषः (छन्दः) वेदरूपः (ऋतम्) सत्य स्वरूपः (बृहत्) महान् परमेश्वरः (नः) अस्माकं (द्विषः) द्वेष्टॄन् (अति स्वर्षत्) अत्यर्थं सुपतपतु विनाशयतु। स्वृ शब्दोपतापयोः ॥ ६ ॥

**भावार्थः** –१ जिस कारण २ सर्वशक्तिमान् परमेश्वर ३ ईश्वर है उस कारण ४ उस ५ असुरों के जेता ६ अपराजित को ७ हम आह्वान करते हैं ८ वह ९ यज्ञ पुरुष १० वेदरूप ११ सत्यस्वरूप १२ महान् परमेश्वर १३ हमारे १४ द्वेषियों को १५ अत्यन्त विनाश करो ॥ ६ ॥

प्रजापतिर्ऋषिरार्ची जगती छन्द इन्द्रो देवता-

३ १ २ २ ३ १ २ ३ १ २ ३ १ २
इन्द्रं धनस्य सातये हवामहे जेतारमपराजितम्।
सनः स्वर्षदति द्विषः सनः स्वर्षदति द्विषः ॥७॥

(जेतारम्) (अपराजितम्) (इन्द्रम्) परमेश्वरं (धनस्य) (सातये) योगधनस्य लाभाय (हवामहे) (सः) (नः) अस्माकं (द्विषः) द्वेष्टॄन् (अतिस्वर्षत्) (सः) (नः) (द्विषः) कामादीन् (अतिस्वर्षत्) ॥७॥

**भापार्थः** - १ जेता २ अपराजित ३ परमेश्वर को ४, ५ योग धन के लाभार्थ ६ हम आह्वान करते हैं ७ वह ८ हमारे ९ द्वेषाओं को १० विनाश करो ११ वह १२ हमारे १३ द्वेषा कांम आदि को १४ अत्यन्त विनाश करो - ७॥

प्रजापतिर्ऋषिर्भुरिगार्षी पंक्तिश्छन्द इन्द्रो देवता-

पूर्वस्य यत्ते अद्रिवो ऽंशुर्मदाय —
सुम्न आधेहि नो वसो पूर्तिः शविष्ठ शस्यते। वशी हि
शक्रो नूनं तन्नव्यं संन्यसे ॥८॥

हे (अद्रिवः) ज्ञानवज्र वन् (वसो) वासुदेव (पूर्वस्य) पुरातनस्य (ते) तव (यत्) (अंशुः) मानस सूर्यः (मदाय) अस्तितं (नः) अस्मान् वाग्ऋत्विज श्च (सुम्ने) मोक्ष सुखे (आधेहि) स्थापयहे (शविष्ठ) वलवत्तम (पूर्तिः) जीवात्मनातव पूर्तिः (शस्यते) स्तूयते (हि) यस्मात् (नूनम्) अवश्यं (वशी) सर्वस्य नियन्ता (शक्रः) सर्व शक्तिमानसि (तत्) तस्मात् (नव्यम्) संस्कृतात्म मतिविंवं (संन्यसे) त्वयि प्रक्षिपामि। अ सुक्षेपणे ॥८॥

**भापार्थः**

१ हे ज्ञान वज्र धर २ वासुदेव ३, ४ तुम्ह पुरातन का ५ जो ६ मानस सूर्य ७ मद के लिये है उसको ८ और हम वाक् आदि ऋत्विजों को ९ मोक्ष सुख में १० स्थापन करो ११ हे महावली १२ जीवात्मा से जो तेरी पूर्ति है वह १३ स्तुति की जाती है १४ जिस कारण १५ अवश्य १६ सव के नियन्ता १७ सर्व शक्ति मान हो १८ उस कारण १९ संस्कृत आत्म मति विंव को २० तुम में फेंकता हूं ॥८॥

प्रजापतिर्ऋषिरार्ष्यनुष्टुप् छन्द इन्द्रो देवता-

प्रभोजनस्य वृत्रहन्त्समर्येषु ब्रवावहै। शूरो यो गो
षु गच्छति सखा सुशेवो अद्वयुः ॥९॥

हे(प्रभो)(वृत्रहन्) पापनाशक परमेश्वर(जनस्य) जिज्ञासु समूहस्य(अर्य्येषु) ईश्वरेषु गुरुषु मध्ये(संव्रवामहै) यजमानो ऽहं मे पत्नी रूपा बुद्धिश्च(संव्रवावहै) सम्भाषां करवावहै कस्य(यः)(शूरः)(सखा) भक्तानां सखा(सुशेवः) आनन्द स्वरूपः(अद्वयुः) द्वन्द्व रहितः द्वैत शून्यो वा(गोषु) स्वांशु रूपेषु यजमानेषु(गच्छति) प्राप्तो भवति॥९॥

## भाषार्थः

१ हे समर्थ २ पापनाशक परमेश्वर ३ जिज्ञासु समूह ४ ईश्वरों वा गुरुओं के मध्य ५ में यजमान और मेरी पत्नी बुद्धि दोनो ६ उसके विषय सम्भाषण करें ७ जो ८ शूर ९ भक्तों का सखा १० आनंद स्वरूप ११ अद्वैत १२ अपने किरण रूप यजमानों में १३ प्राप्त होता है॥९॥ पञ्च पुरीषपदानि

प्रजापति ऋषिः साम्नी त्रिष्टुप् छन्द इन्द्रो देवता

एवाहोऽ ३ऽ३ऽ ३ वएवो ३ँ ह्यग्ने एवाहीन्द्र। एवा हि पूषन् एवाहि देवाः॥१०॥४

हे(एव) सर्व व्यापिन् सर्वस्य गति साधन महा पुरुष त्वं(एवाहि) एवम्प्रकार एवासि हे(अग्ने) अग्ने आत्माग्ने वा त्वं(एवाग्ने)(हि) एवम्प्रकार एवाऽसि हे(इन्द्र) इन्द्र ईश्वर वा त्वं(एवाहि) एवम्प्रकार एवासि हे(पूषन्) सोम मानस सूर्य वा त्वं(एवाहि) एवम्प्रकार एवासि(देवाः) हे देवाः विद्वांसो वा यूयं(एवाहि) एवम्प्रकारा एव स्थ यथा पूर्व मन्त्रेषु प्रशंसिताः॥१०॥४

**भाषार्थः** — १ हे सर्व व्यापिन् सर्व गति साधन महा पुरुष तुम २ ऐसे ही हो ३ हे अग्ने वा आत्माग्नि तुम ४,५ ऐसे ही हो ६ हे इन्द्र वा ईश्वर तुम ७ ऐसे ही हो ८ हे सोम वा मानस सूर्य तुम ९ ऐसे ही हो १० हे देवताओ वा विद्वानो तुम ११ ऐसे ही हो जिस प्रकार पूर्व मंत्रों मे प्रशंसा किये गये॥१०॥४॥

इति श्री भृगुवंशावतंस श्री नाथूराम सूनु ज्वाला प्रसाद शर्म्म विरचिते सामवेदीय ब्रह्म भाष्ये छन्दो व्याख्याने महानाम्नी व्याख्यानं समाप्तम्॥

सामवेद संहितायां महानाम्न्यार्चिकः समाप्तः

(हस्ताक्षर सालिग राम कायस्थ कापीनवीस)

लोहामंडी आगरा॥

